श्रीमत्पुरुषोत्तमदेवविरचिता

# भाषावृत्तिः

[ पाणिनीयाष्टाध्यायीव्याख्या ]

तारा पब्लिकेशन्स

वाराणसी

प्राच्यभारतीग्रन्थमाला–९

श्रीमत्पुरुषोत्तमदेवविरचिता

# भाषावृत्तिः

## [ पाणिनीयाष्टाध्यायीव्याख्या ]





सम्पादकः

स्वामी द्वारिकादासशास्त्री

व्याकरणपालिसाहित्यबौद्धदर्शनाचार्यः

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

तारा पब्लिकेशन्स,

वाराणसी.

१९७१

*Prachya Bharati Series–9*

# BHĀSHĀVṚTTI

[A COMMENTARY ON PĀṆINI'S GRAMMAR]

BY

PURUSHOTTAMADEVA





EDITED BY

SWAMI DWARIKADAS SHASTRI

*Ācārya (Vyākaraṇa, Pāli & Bauddhadarshana)*

Varanaseya Sanskrit Vishvavidyalaya

VARANASI

TARA PUBLICATIONS

VARANASI

1971




# प्रकाशकीयम्

सुरैरपि स्पृहणीयस्यास्य वन्दनीयस्य भारतभूमिभागस्य प्राचीनेतिवृत्तं स्वस्मिन्नादधाना सुरभारतीयं जगतोऽखिलास्वपि भाषासु प्राचीनतमेति निश्चप्रचम्। एतद्देशप्रसूतैर्मुनिभिः, आचार्यैः, विद्वद्धौरेयैश्च समये समये यानि कानिचिदपि गभीराणि मनोहराणि च ग्रन्थरत्नानि ग्रथितानि, तानि सर्वाणि गीर्वाणवाण्यामेवेति सर्वैः सुविदितम्।

परमिदानीं त्वेतच्चेतःखेदकरमेवाभाति यदीदृश्या भाषाया भूयांसस्ते ग्रन्थमणयो दैवदुर्विपाकवशाल्लुप्तसत्ताका ग्रथिता अप्यग्रथिता इवाभूवन्। अपि च तेषु केचिद् यथाकथञ्चिद् गृहीतस्वसत्ताका अपि प्रकाशकैस्तथा विकृतिं नीता यदद्य तेषां पठनाद् अपठनमेव श्रेयः। केषाञ्चिदङ्कनं न मनोहारि, केषाञ्चिच्च ग्रन्थरत्नानां सन्दर्भो व्यत्ययमापादितस्तादृग्भिः पण्डितम्मन्यैः।

अतः बहोः कालादस्माकं मनस्ययं विचारः पदमादधदासीद् यत् कश्चिन्मनस्वी दोषानिमान्निरस्य आदर्शभूतान् दुर्लभान् सूपयोगिनश्च संस्कृतग्रन्थान् प्रकाशयेद्, येन सुरभारत्याश्चिरायोपकृतिर्भवेत्। एतद्धियैवास्माभिरिदम् '*प्राच्यभारतीप्रकाशनम्*' समारब्धम्। अत्र वयं यथासमयं सुदुर्लभान् संस्कृतभाषामयान् महत्त्वशालिनो ग्रन्थान् मुद्रापयित्वा प्रकाशयामः।

१९६४तम ईशाब्दे अस्य प्रथमं प्रकाशनं—*माधवीया धातुवृत्तिः*, यत्र हि पाणिनीयधातुपाठमाश्रित्य श्रीमत्सायणाचार्येण धातूनामतिविस्तृतं साङ्गोपाङ्गं व्याख्यानं कृतम्। ग्रन्थोऽयं वैयाकरणानां कृते कियानुपकारकोऽस्तीति मात्सर्यरागविधुरा भाषातत्त्वविदो विदन्त्येव।

ततश्चानेकेभ्यो वर्षेभ्यो लुप्तप्रायोऽपरो ग्रन्थः पाणिनीयशब्दानुशासनसम्बद्धः *काशिकावृत्तिनामा* विद्वद्वरवामनजयादित्यविरचितो बोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितन्यासेन श्रीहरदत्तमिश्रकृतपदमञ्जरीव्याख्यया च सनाथः षट्सु भागेषु विभज्य १९६५-६७तमेष्वीशाब्देषु प्राकाश्यं नीतः।

इदानीं पाणिनीयशब्दानुशासनेन सम्बद्धैव श्रीपुरुषोत्तमदेवविरचिता भाषावृत्तिरियं विद्वन्मनोहारिणी विद्वत्सु लब्धप्रतिष्ठैः स्वामिवर्यैः साधु सम्पादयित्वा प्रकाश्यते।

आशास्महे च वयमन्येषामप्युपयोगिनां ग्रन्थरत्नानां समये समये विदुषां समक्षमुपस्थापनयोग्या भवेम इति।

प्रकाशकः



# सम्पादकीयम्

## देववाण्या माहात्म्यम्

विश्वस्याखिलास्वपि प्रत्नासु भाषासु देववाण्येवोच्चैस्तमां विराजते। ऋग्वेदोऽस्याः प्रथमं देदीप्यमानं ग्रन्थरत्नम्, यत्र हि भारतीयसंस्कृतेः रहस्यं निगूढमस्ति। अस्या भाषाया अध्ययनं विना भारतीयानां संस्कृतेः, इतिहासस्य, धर्मस्य, आचारस्य वा ज्ञानमसम्भवमेव। अस्याः साहित्यमहोदधौ अनेकानि महार्घाणि ग्रन्थरत्नानि राजन्ते। एतावत् समृद्धं विपुलं च साहित्यं नास्त्यन्यत्र कस्यामपि भाषायामिति स्पष्टतरम्। अथ च नास्त्यन्यस्या भाषाया एतादृगविच्छिन्नः सरलः प्रवाहः। सत्यामप्यतिप्राचीनायामस्यामद्यत्वेऽपि नव-नवोन्मेषशालिनी प्रतिभा तथैव विद्यते। किञ्चेयं भाषैव अन्यासां पालि-प्राकृतादिप्राचीनार्वाचीनभाषाणां जननी सती स्वकीयेन स्तन्यामृतपानेन ताः पोषयतीव दृश्यते।

पाश्चात्त्यविद्वांसोऽपि अस्या विपुलं समृद्धं च साहित्यं दृष्ट्वा आश्चर्य-मापन्ना इव जाताः। अन्ते च तेऽप्यस्मिन् साहित्ये प्रणिपातेन, परिप्रश्नेन, सेवया च आपाताललनिमग्नपीवरतनवो जाताः। भृशमालोड्य चैतत् ते भाषाविज्ञाननामकमेकमपूर्वं शास्त्रमुद्धृतवन्तः। ते स्पष्टमेवोर्ध्वबाहवः सन्त उद्घोषयन्ति यद् देववाणी (संस्कृतभाषा) एव समस्तानां भारतीयभाषाणां दृढा शृङ्खला, यया सर्वा अपि ताः परस्परं सम्बद्धाः।

"विक्रमपूर्वतः सहस्राणि वर्षाण्यारभ्य द्वादशशताब्दीं यावत् संस्कृतभाषैव जनभाषा राष्ट्रभाषा वा आसीत्" इति मतं बहुना सुपुष्टेन प्रमाणजातेन साधितं विद्वद्भिः। इदानीमपि चैतत् ततोऽधिकतराभिर्वाचोयुक्तिभिः साधयितुं शक्यते। किं बहुना, अद्यापि स्वतन्त्रभारतस्य राष्ट्रभाषाया गुणाः संस्कृत-भाषायामेव वर्त्तन्ते—इति निर्विवादम्!

## व्याकरणम्

कस्या अपि भाषाया ज्ञानं रक्षणं वा व्याकरणाद् ऋते न भवति। अतो व्याकरणं विना सा भाषा अपूर्णा असम्बद्धा वा स्यादित्येतन्मतं पुरा देवैरपि स्वकीयभाषामधिकृत्यानुभूतम्। तैरिन्द्रः प्रार्थितः—'इमां नो वाचं व्याकुरु' इति। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। इदमैन्द्रं व्याकरणं लोके व्याकरण-परम्पराया मूलम्।

देववाणी, संस्कृतभाषा चेत्यनर्थान्तरम्। सा च तदानीं यथा देवलोके, तथेह लोकेऽपि व्यवह्रियते स्म प्रजाभिः। इति लौकिकव्याकरणानामपि प्रथमं

व्याकरणमैन्द्रं व्याकरणं वक्तुं शक्यते। तच्च व्याकरणं विविधविषयकान् लौकिकानलौकिकांश्च शब्दकदम्बान् व्याकुर्वद् बहुविधं बहुशो बहुभिस्तीव्रतरशेमुषीमुखस्थीकृताखिलशास्त्रतत्त्वैः प्रवर्त्तितमभूत्—इति पुरातनसुधीजनबुद्धिवृद्धिसमुद्धृतग्रन्थावगाहनेनावगम्यते। गणनया यथा—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥ इति।

परं हन्त, नेदानीं पाणिनीयमन्तरा तेष्वेकमपि अस्मत्पाणितलं साध्वलङ्करोति। पाणिनिमुनिप्रणीतं च तद् व्याकरणं समस्तशब्दशास्त्रातिशायि सकलव्याकरणतत्त्वसञ्चितम् अष्टभिरध्यायैरुपनिबद्धं सूत्ररूपमिति नातिगुप्ततमम्। तत्सहाध्यायिना व्याडिविदुषा सूत्राणां व्याख्यानभूतः सर्वतः प्रथमं कश्चित् सङ्ग्रहग्रन्थोऽपि समगृह्यत। यदिदानीमसौ नोपलभ्यत इत्यस्माकं दौर्भाग्यध्वनकमेव। अथापरस्मिन् काले पाणिनिसूत्राणां निसर्गदुरूहत्वाद् 'नेदं मन्दमतिसमतिक्रान्तं स्याद्' इति धिया करुणावरुणालयेन पतञ्जलिमुनिनाऽत्र महाभाष्यनामको ग्रन्थो निरमायि। व्याकरणन्यायमिश्रितपदावलीमध्यगतार्थप्रतिपादनसाधनकं वाक्यपदीयमपि भर्तृहरिपादैः प्राणायि। परन्तु नैतावतापि करालकलिकालफूत्कृतधियां व्याकरणतन्त्रे धिषणासमुद्रेक इति वामनजयादित्याभ्यां सरलपद्धत्या सूत्रार्थ-तदुदाहरण-प्रकाशिका काशिकावृत्तिः विरचिता।

एतस्यां परम्परायां सङ्ग्रहग्रन्थतः काशिकां यावत् सर्वेष्वेव ग्रन्थेषु सर्वैरेव ग्रन्थकृद्भिः सर्वाण्येव लौकिकवैदिकशब्दसाधकानि पाणिनीयसूत्राणि व्याख्यातानीति विशेषः।

## भाषावृत्तिः

गच्छता कालेन भारतीयदर्शनवीथिष्वेतादृशोऽपि मुनयश्चर्यामकार्षुः, यैस्स्वतर्कजालेनोच्चैरुद्घोषितं यद् वेदस्य पठनं निरर्थकमेवेति। तन्मतानुयायिनो वेदेष्वननुरक्ता जना लौकिकवैदिकशब्दसाधकेषु महत्सु ग्रन्थेषु किमर्थं व्यर्थं परिश्राम्येयुरिति बुद्ध्या बौद्धेन श्रीपुरुषोत्तमदेवविदुषा लौकिकशब्दसाधनोपयोगीन्येव सूत्राणि काशिकावृत्तिपद्धतिमनुसृत्य भाषावृत्तिनाम्ना व्याख्यातानि।

इदं पाणिनीयव्याकरणस्य माहात्म्यमेव यद् बौद्धैर्दर्शने व्यवहारे च स्वतन्त्रः पन्था अनुसृतः, परन्तु व्याकरणं पाणिनिमुनिप्रणीतमेव स्वीकृतम्। अन्यथा ब्राह्मणानां नामग्रहणेऽपि पापं मन्यमानाः कथं ब्राह्मणैः समादृतस्य ग्रन्थस्य प्रामाण्यं स्वीकुर्युः!

## ग्रन्थकर्तुः समयः

पुरुषोत्तमदेवोऽयं द्वादशशताब्द्यामिमां भारतभूमिमलञ्चकार। बौद्ध-मतावलम्बिनो वङ्गदेशीयस्य महाराजलक्ष्मणसेनस्यायं राजसभापण्डित आसीद् इति तस्यैव वैदिकप्रयोगानर्थिनो महाराजस्याज्ञया स इमां भाषावृत्तिं विरचितवान्—इति व्याकरणेतिहासकोविदा मीमांसकप्रभृतयः प्रमाणबलेनाहुः।

अयं बौद्धमतावलम्बी आसीदिति अस्य ग्रन्थसमीक्षणेन स्पष्टं ज्ञायते। तथा ह्ययमादौ 'नमो बुद्धाय भाषायाम्' इत्यादिना बुद्धं प्रणमति। मध्येऽपि यत्र तत्रोदाहरणप्रदर्शनप्रसङ्गे 'बौद्धो जिनः पातु वः' (३.३.१७३) 'न दोषप्रति बौद्ध-दर्शने' (२.१.९) 'महाबोधिं गन्तास्मः'(३.३.१३७)'प्रणम्य शास्त्रे सुगताय तायिने' (१.४.३२) इत्याद्युदाहरणमिषेण भगवन्तं बुद्धं प्रति स्वकीयां श्रद्धां प्रकटीकरोति।

## ग्रन्थकर्तुरन्याः कृतयः

अनेन विदुषा व्याकरणं कोशं चाधिकृत्यान्येऽपि ग्रन्था रचिताः। तत्र केचन इमे—

१. महाभाष्ये 'प्राणपणा' लघुवृत्तिः
२. कारककारिका
३. दुर्घटवृत्तिः
४. परिभाषावृत्तिः
५. ज्ञापकसमुच्चयः
६. उणादिवृत्तिः
७. कारकचक्रम्
८. त्रिकाण्डशेषः (कोषः)
९. अमरकोशपरिशिष्टम्
१०. हारावलीकोषः
११. वर्णदेशना इत्यादयः।

## भाषावृत्त्यर्थविवृत्तिः

वंगदेशवास्तव्यश्रीसृष्टिधरचक्रवर्त्तिमहोदयेनास्या वृत्तेः भाषावृत्त्यर्थविवृति-नाम्नी टीका लिखिता। सेयं टीका बालानां सुखबोधायालम्। विदुषां कृते त्वकिञ्चित्करी एवेति तदुपलभाया अस्माभिर्न बहु प्रयतितम्। अन्यथा वङ्गप्रदेशतः कुतोऽपि लब्धा स्यादेव। अस्माकं पुस्तकालये चास्याः सर्वेऽपि हस्तलेखास्त्रुटिता एव, नैकोऽपि सम्पूर्ण इत्यपि तन्मुद्रणविरतौ हेतुः।

इयं वृत्तिः प्रायशः काशिकावृत्त्यनुसारिणी—इति काठिन्य-सन्देहादि-प्रसङ्गेषु काशिकावृत्तिः, तत्र हरदत्तमिश्रस्य पदमञ्जरी, जिनेन्द्रबुद्धिविरचितो न्यासो वा अवलोकनीया विद्वद्भिः।

## सम्पादनम्

अस्माभिरनुसृतात्र सम्पादनशैली त्वित्थमधोऽङ्किता—

(१) सूत्रपाठः सर्वत्रैव वृत्तिमनुसृत्य स्थापितः। सत्यविरोधे काशिकावृत्तिरपि तत्र तत्र समीक्षिता।

(२) सूत्रानन्तरं तस्य वृत्तिः, उदाहरणानि च एकस्मिन्नुपबन्धे स्थापितानि। प्रत्युदाहरणानि चापरस्मिन्नुपबन्धे।

(३) व्याख्याप्रसङ्गे आगतं पाणिनिसूत्रं द्विकचिह्नेन (" ") संयोजितम्।

(४) उदाहरणप्रसङ्गेषु अन्येषां ग्रन्थानां वाक्यानि एककचिह्नेन (' ') संयोजितानि।

(५) मतवैचित्र्यप्रदर्शनप्रसङ्गे स्मृता ग्रन्था ग्रन्थकाराश्च विभिन्नाक्षरैर्मुद्रापिताः, येनाध्येतॄणां चक्षूंषि तत्र सद्य एवाभिनिपतेयुः।

(६) अव्याख्यातानि छान्दससूत्राणि अपि पाठसौकर्याय तत्र तत्र टिप्पण्यां स्थापितानि।

(७) यत्र तत्र सत्यावश्यकत्वे टिप्पण्यादयोऽपि संयोजिताः।

(८) भाषाजाटिल्यनिरासार्थं तत्र तत्र दुरवगमः सन्धिजालोऽप्यस्माभिर्निरस्तः, येनायासमन्तरैवान्तेवासिनामप्यत्र सुखावगतिर्भवेत्, ग्रन्थस्यास्य च सौन्दर्यमक्षुण्णं स्यात्।

(९) अत एव चास्माभिरधुनोपयुज्यमानानि विरामादिचिह्नान्यपि सर्वत्रोपयोजितानि, येन ग्रन्थकर्तुर्हृदयं पिपठिषुभिस्सपदि समासादितं स्यात्।

(१०) अनुसन्धित्सूनां समयव्ययो मा भूदिति प्रतिपृष्ठं व्याख्यायमानसूत्रसंख्या, अध्याय-पादसंख्या च स्थापिता।

(११) प्रारम्भ एव च वृत्तिस्थविषयवस्तुसूची पृष्ठक्रमेण उट्टङ्किता।

(१२) अन्ते च ग्रन्थकृता स्मृतानां ग्रन्थानां ग्रन्थकाराणां सूची, उदाहरणमिषेणागतानां पूर्वसूरीणां वाक्यानां सूची, पूर्ववैयाकरणानां कारिकारूपेणोद्धृतानां वाक्यानां च सूची अपि अत्र समायोजिता।

एवं बहुतरेण प्रयत्नेन सम्पादितोऽयं ग्रन्थो बालानां सुखावबोधकरः, विदुषां च परमाह्लादकरः स्यादित्याशासे।

अन्ते च ग्रन्थेऽस्मिन् मदीयेन मतिमान्द्येन, दृष्टिदोषेण वा जातानि स्खलनानि यदि यत्रकुत्रचिदपि दृष्टिपथमागच्छेयुः, तदर्थमहं क्षन्तव्योऽस्मि विद्वद्भिरिति प्रार्थयते—

वाराणसी
२५.१२.७०

विदुषां वशवदः
स्वामी द्वारिकादासशास्त्री

भाषावृत्तिस्थ–

# विषय-सूची

---

महामहोपाध्यायश्रीपुरुषोत्तमदेवकृता

# भाषावृत्तिः

नमो बुद्धाय, भाषायां यथात्रिमुनिलक्षणम् ।
पुरुषोत्तमदेवेन लघ्वी वृत्तिर्विधीयते ॥

अथ शब्दानुशासनम् । लौकिकानाम्[1] । प्रकृतिप्रत्ययविभागपरिकल्पनया[2], सामान्यविशेषवता च[3] लक्षणेन; गत्यन्तराभावात् ।

वर्णानामुपदेशः क्रमसन्निवेशानुबन्धासञ्जनार्थः[4] । तदुभयं संज्ञार्थम्[5] । संज्ञा च लाघवेन शास्त्रप्रवृत्त्यर्था ।

अकारस्य विवृतोपदेश आकारग्रहणार्थः ।

## अथ प्रत्याहारप्रकरणम्

१. अ इ उ ण् । २. ऋ ऌ क् । ३. ए ओ ङ । ऐ औ च् । ५. ह य व र ट् । ६. ल ण् । ७. ञ म ङ ण न म् । झ भ ञ् । ९. घ ढ ध ष् । १०. ज ब ग ड द श् । ११. ख फ छ ठ थ च ट त व् । १२. क प य् । १३. श ष स र् । १४. ह ल् । इति प्रत्याहाराः ।

अकारादीनेतान् वर्णान् क्रमेणोपदिश्यान्ते णकारादीनित्संज्ञकाननुबध्नाति प्रत्याहारार्थम् । तत्र णकाराद्यैश्चतुर्दशभिरनुबन्धैर्यथाक्रमम्—

एकं त्रीणि पुनश्चैकं चत्वार्येकं त्रयं त्रयम् ।
एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव च[6] ॥ इति ।

---

१. केषां शब्दानामिति बुद्ध्यारूढ प्रश्नमुत्तरयति ।

२. कथमनुशासनमिति शेषः ।

३ परिकल्पनयेति हेतौ तृतीया, लक्षणेनेति च करणे तृतीया, एवमत्र 'च' इति पदं निरर्थकमेव प्रतिभाति ।

४. शब्दानुशासन एवाभीप्सिते वर्णानामुपदेशः किमर्थः ? इत्याह- वर्णानामित्यादि ।

५. प्रत्याहारार्थमित्यर्थः ।

६. एतदेव स्पष्टयति काशिकाकारः—

"एकस्मान् ङञणवटाः, द्वाभ्यां षः, त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यः, रः पञ्चभ्यः, शलौ षड्भ्यः ॥" इति ।

अण्। अक्, इक्, उक्। एङ। अच्, इच्, एच्, ऐच्। अट्। अण्, इण्, यण्। अम्, यम्, ङम्। यञ्। झष्, भष्। अश्, हश्, वश्, झश्, जश्, पुनर्बश्। छव्। यय्, मय्, झय्, खय्। यर्, झर्, खर् चर्, शर्। अल्, हल्, वल्, रल्, झल्, शल्। इत्येकचत्वारिंशत् प्रत्याहारा[1] भवन्ति।

"उरण् रपरः" (१.१.५१), "चयो द्वितीयाः शरि पौष्करसादेः" (८.४.४८ वा०), "ञमन्ताड्डः" (उ० १.१११) इत्येतैश्चतुश्चत्वारिंशदिति[2]।

—

## प्रथमाध्याये प्रथमः पादः

### अथ वृद्धयादिसंज्ञाप्रकरणम्

**१. वृद्धिरादैच्॥**

आद् ऐकार औकारश्च वृद्धिसंज्ञकाः स्युः।

**२. अदेङ् गुणः॥**

अद् एकार ओकारश्च गुणसंज्ञकाः स्युः।

**३. इको गुणवृद्धी॥**

अनुक्तस्थाने ये गुणवृद्धी ते इक एव स्थाने वेदितव्ये। "सार्वधातुकार्धधातुकयोः" इत्यङ्गस्य गुणो भवति—चेता, होता, स्तोता, भविता, तरिता। "सिचि वृद्धिः परस्मैपदेषु"—अचैषीत् अहौषीत्, अस्तावीत्, अलावीत्, अकार्षीत्।

कथं द्यौः, पन्थाः, सः? गुणवृद्धिशब्देनानभिधानात्।

**४. न धातुलोप आर्धधातुके॥**

धात्वेकदेशो धातुः। धातुलोपनिमित्त आर्धधातुके ये गुणवृद्धी प्राप्नुतस्ते न स्तः। लोलुवः। पोपुवः। मरीमृजः। पचाद्यचि यङो लुक्।

इक इत्येव—अभाजि। रागः।

---

१. अष्टाध्याय्यां व्यवहृताः प्रत्याहारा इत्यर्थः।

२. पाणिनीयशास्त्रे व्यवहृता एतावन्त एव प्रत्याहारा सन्तीत्यर्थः।

५. क्ङिति च ॥

किति ङिति च निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न स्तः। किति—चितम्, स्तुतम्, भुक्तम्, कृतम्, सृष्टः। ङिति—चिनुतः, चिन्वन्ति। कुरुतः, कुर्वन्ति। मृष्टः, मृजन्ति। ममृजुः।

कथं मार्जन्ति, ममार्जुः?

❀ मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते[1] ❀।

व्यवस्थितविभाषया नित्यम्—तुन्दपरिमृजः।

६. दीधीवेवीटाम् ॥

दीधीवेव्यौ छान्दसौ। इटो गुणो न स्यात्। अकणिषम्, अरणिषम्। लुङि मिपि लघूपधगुणोऽत्र निषिद्धः।

७. हलोऽनन्तराः संयोगः ॥

संलग्ना हलः 'संयोगः' इत्युच्यन्ते। अग्निरिति ग-नौ। स्त्रीति स-त-राः।

८. मुखनासिकावचनोऽनुनासिकः ॥

मुखसहितया नासिकया यो वर्ण उच्चार्यते सोऽनुनासिकसंज्ञकः स्यात्। अँ। आँ। ओँ। ङ-ञ-ण-न-माः। दधिँ।

९. तुल्यास्यप्रयत्नं सवर्णम् ॥

तुल्यमास्यं ताल्वादिस्थानं प्रयत्नः स्पृष्टतादिश्च येषां तेऽन्योन्यं सवर्णसंज्ञकाः स्युः। वर्ग्यो वर्ग्येण सवर्णः। अचः सस्थानाः। "अनुस्वारस्य ययि परसवर्णः"—शङ्कित, कुण्डिता। "अकः सवर्णे दीर्घः"—दण्डाग्रम्, खट्वाग्रम्।

❀ ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या ❀। होतृ ऌकारो होतॄकारः। ऌकारो दीर्घो नास्तीति ॠकारः।

१०. नाज्झलौ ॥

अज्-हलौ परस्परं सवर्णसंज्ञकौ न स्तः। दण्डहस्तः। दधि शीतम्। वैपाशो मत्स्यः। आनडुहं चर्म। "यस्येति च" इति लोपो न भवति।

---

१. एतद् भाष्यकारेणान्यदीयमतत्वेन "इको गुणवृद्धी" (पा० सू० १.१.३) इत्यत्रोऽन्यस्तम्। तथा च—"इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते—परिमृजन्ति, परिमार्जन्ति, परिममृजतुः, परिममार्जतुरित्याद्यर्थम्।" इति। संक्रामतो गुणवृद्धी अस्मादिति संक्रमः, क्ङित्प्रत्यय इत्यर्थः।

अथ प्रगृह्यसंज्ञाप्रकरणम्

### ११. ईदूदेद् द्विवचनं प्रगृह्यम् ॥

ईदूदेकारान्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । अग्नी इमौ । वायू अत्र । खट्वे इह । पचेते इह ।

❀ मणीवादीनां प्रतिषेधो वक्तव्यः ❀ । इत्येके ।

इवार्थे वकारोऽयमित्यन्ये । मणीव । दम्पतीव ।

### १२. अदसो मात् ॥

अदसो मकारात् परमीद्, ईद्, एत् प्रगृह्यसंज्ञं स्यात् । अमी अत्र । अमू आसाते ।

मादिति किम् ? अमुकेऽत्र । अदसः किम् ? शम्यत्र ।

### १३. शे ॥

'शे' इति सूत्रं छन्दोभागः सुपामादेशः ।

### १४. निपात एकाजनाङ् ॥

एको योऽज् निपातः स प्रगृह्यसंज्ञकः स्यात् । अ अपकर्ष । उ उत्तिष्ठ । आ एवं मन्यसे । आ एवं किलैतत् । अनाङ किम् ? आ उष्णम् ओष्णम् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥

### १५. ओत् ॥

ओदन्तो यो निपातः स प्रगृह्यसंज्ञः स्यात् । अहो अहम् । उताहो इति ।

### १६. सम्बुद्धौ शाकल्यस्येतावनार्षे ॥

सम्बुद्धावोदन्तं शाकल्यस्य मतेन प्रगृह्यसंज्ञं स्यादितौ परे । भानो इति । अन्येषाम्—भानविति ।

सम्बुद्धौ किम् ? गवित्ययमाह ।

अनार्ष इत्येकवृत्तावुपयुक्तम्[1] ।

---

१. एकवृत्तौ = साधारणवृत्तौ, वैदिके लौकिके च विवरणे इत्यर्थः । "एकवृत्तौ" इति काशिकायां वृत्तावित्यर्थः । एकशब्दस्य मुख्यार्थत्वात् काशिकायां मुख्यवृत्तौ । छन्दस्यपि व्याख्यानादिति भावः । भागवृत्तेरन्यस्यां वा । सा हि द्वयोर्विवरणकर्त्री"— इति भाषावृत्त्यर्थविवृत्तौ सृष्टिधरचक्रवर्त्ती ।

**१७. उञः ॥**

उञ् इतौ शाकल्यस्य मतेन प्रगृह्यसंज्ञः स्यात् । उ इति । अन्येषां विति ।

**१८. ऊँ ॥**

उञ इतौ ऊँ इति चादिश्यते[1] शाकल्यस्य मतेन । ऊँ इति । उइति । अन्येषाम्—विति ।

**१९. ईदूतौ च सप्तम्यर्थे ॥**

'ईदूतौ च' इति सूत्रं छन्दोभागः ।

उक्तं प्रगृह्यम् ॥

अथ घ्वादिसंज्ञाप्रकरणम्

**२०. दाधा घ्वदाप् ॥**

दाञ्-दाण्-दो-देङो धाञ्-धेटौ च घुसंज्ञकाः स्युः । प्रणिददाति । प्रणिदधाति ।

अदाबिति किम् ? दाब्-दैपोर्मा भूत्—दातं धान्यम्, अवदातं वस्त्रम् ।

**२१. आद्यन्तवदेकस्मिन् ॥**

असहाये आद्यन्तवत् कार्यमतिदिश्यते, वलादेरिट्—अलाविषुः । अजादावियङुवङौ—श्रियौ, भ्रुवौ । अन्तवत्त्वेऽजन्ताद् यत्—अध्येयम् ।

❀ व्यपदेशिवदेकस्मिन्निति वक्तव्यम् ❀ । "एकाचो द्वे प्रथमस्य" इति बहुव्रीहिं वक्ष्यति । स यथेह—जजागार, तथा—इयाय, आर । "आदेशप्रत्यययोः" इति षत्वं वक्ष्यति, यथेह—पक्ष्यति, तथा—अपाक्षीत् ।

**२२. तरप्तमपौ घः ॥**

एतौ घसंज्ञकौ स्याताम् । कुमारितरा, कुमारितमा । गौरितमा । "घरूप" इति ह्रस्वः ।

**२३. बहुगणवतुडति संख्या ॥**

बहु-गणौ प्रचुरार्थौ, वतु-डती प्रत्ययौ—एते संख्यासंज्ञाः स्युः । बहु-कृत्वः । गणकृत्वः । गणशः । तावत्कृत्वः । कतिधा ।

---

१. अनुनासिकफलं तु "यरोऽनुनासिकेऽनुनासिको वा" इति पाक्षिकानुनासिकत्वम् । यथा—यदेतनूँ इति पठसि, पक्षे यदेतद्धूँ इति पठसीति ।

२४. ष्णान्ता षट् ॥

२५. डति च ॥

षकार-नकारान्ता संख्या डतिप्रत्ययान्ता च षट्संज्ञा स्यात्। षट् सन्ति, पश्य वा। पञ्च, सप्त, नव, दश पुरुषाः। एकादश। अष्टादश। कति सन्ति। कति पश्य। "षड्भ्यो लुक्" इति जश्-शसोर्लुक्।

२६. क्तक्तवतू निष्ठा ॥

एतौ "निष्ठा" इत्युच्येते। भिन्नः, भिन्नवान्।

अथ सर्वनामसंज्ञाप्रकरणम्

२७. सर्वादीनि सर्वनामानि ॥

सर्वप्रभृतीनि सर्वनामसंज्ञकानि स्युः। सर्वस्मै, सर्वस्मात्। विश्वस्मै, विश्वस्मात्। उभशब्दो नित्यद्विवचनटाब्विषयः। उभयोऽन्यत्र। डतर, डतम, इतर, अन्य, अन्यतर। अन्यपर्यायः—त्वत्, त्व। नेम—अर्धपर्यायः; नेमभिन्नः। सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर्, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्।

२८. विभाषा दिक्समासे बहुव्रीहौ ॥

दिग्बहुव्रीहौ सर्वनामसंज्ञा वा स्यात्। उत्तरपूर्वस्यै, उत्तरपूर्वायै।

२९. न बहुव्रीहौ ॥

बहुव्रीहौ सा संज्ञा नास्ति। प्रियविश्वाय देहि। स्मैभावो न भवति। त्वत्कपितृकः, मत्कपितृकः।

कुत्साद्यर्थे प्राक् टेरकज् न भवति, "प्रागिवात् कः" एव भवति।

३०. तृतीयासमासे ॥

अत्र सर्वनामसंज्ञा नास्ति। मासपूर्वाय देहि।
पुनः समासग्रहणाद् वाक्येऽपि—मासेन पूर्वाय।

३१. द्वन्द्वे च ॥

द्वन्द्वे सा संज्ञा नास्ति। पूर्वापराणाम्। कतरकतमानाम्।

३२. विभाषा जसि ॥

द्वन्द्वे जसि सा संज्ञा वा स्यात् । कतरकतमे, कतरकतमाः ।

३३. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥

एते जसि वा सर्वनामानि स्युः । प्रथमे, प्रथमाः । चरमे, चरमाः । तयप्—द्वितये, द्वितयाः । द्वये, द्वयाः । अल्पे, अल्पा इत्यादि ।

३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥

इमानि जसि वा सर्वनामानि स्युः । पूर्वे, पूर्वाः । परे, पराः ।

व्यवस्थायां किम् ? दक्षिणाश्छात्राः । प्रवीणा इत्यर्थः । असंज्ञायां किम् ? उत्तराः कुरवः ।

३५. स्वमज्ञातिधनाख्यायाम् ॥

जसि स्वं वा सर्वनाम स्यात् । स्वे गावः, स्वा गावः ।

अज्ञातिधनाख्यायां किम् ? स्वा ज्ञातयः । प्रभूताः स्वा दीयन्ते ।

३६. अन्तरं बहिर्योगोपसंव्यानयोः ॥

अन्तरं जसि वा सर्वनामसंज्ञं स्यात् । बहिर्योगे—अन्तरे, अन्तरा वा गृहाः, ग्रामबाह्या इत्यर्थः । उपसंव्यानम्=अधोवस्त्रम् । अन्तरे, अन्तरा वा शाटकाः, परिधेया इत्यर्थः ।

❀ अपुरीति वक्तव्यम् ❀ । अन्तरायां पुरि वसति । सर्वादित्वात् प्राप्तेः ।

❀ वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम् ❀ । द्वितीयस्मै, द्वितीयाय ।

अथ अव्ययसंज्ञाप्रकरणम्

३७. स्वरादिनिपातमव्ययम् ॥

स्वरादयो निपाताश्च 'अव्ययम्' इत्युच्यन्ते । स्वर्, प्रातर्, अन्तर्, उच्चैस्, नीचैस्, दिवा, बहिस्, स्वयम्, मृषा, हे, है, स्वाहा, स्वधा, अद्धा, कम्, शम्, सार्धम्, समम्, सह, शुभम्, स्वस्ति, अस्ति ।

आभीक्ष्ण्ये निपाताः । च । वा । इव । वै । एव । इह । इति ।

इह स्वरादयो वाचकाः, चादयो द्योतकाः—इति भेदः ।

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥

**३८. तद्धितश्चासर्वविभक्तिः ॥**

सर्वा विभक्तिर्यतो नोत्पद्यते स तद्धितोऽव्ययं स्यात् । ततः । यत्र । विना । नाना । तसिलादिरेधाच्पर्यन्तः । कृत्वसुच्-सुचौ । शस्-तसी । डाच् । थमु-थालौ । दा-र्हिलौ । च्व्यर्थाः । "किमेत्-तिङव्ययघादाम्वद्रव्यप्रकर्षे"—किन्तराम् । वतिः—ब्राह्मणवत् ।

**३९. कृन् मेजन्तः ॥**

मान्तः कृदव्ययं स्यात् । कर्तुम् । स्वादुङ्कारम् । स्वपोषम् पुष्टः । ईहाञ्चक्रे ।

एजन्तः कृच्छान्दसः ।

**४०. क्त्वा-तोसुन्-कसुनः ॥**

क्त्वान्तमव्ययं स्यात् । कृत्वा । प्रकृत्य । तोसुन्-कसुनौ छान्दसौ ।

**४१. अव्ययीभावश्च ॥**

अव्ययीभावो नाम समासोऽव्ययं स्यात् । उपाग्नि, प्रत्यग्नि ।

इह लुगेव संज्ञाप्रयोजनम्, नाकजादिरिति स्मृतिः ।

उक्तमव्ययम् ॥

**४२. शि सर्वनामस्थानम् ॥**

**४३. सुडनपुंसकस्य ॥**

"जश्शसोः शि." अनपुंसकस्य सुट् च सर्वनामस्थानमुच्यते । शि—कुण्डानि, दधीनि । सुट्—राजा, राजानौ, राजानः, राजानम्, राजानौ । सीमा, सीमानौ ।

अनपुंसकस्य किम् ? सामनी । धामनी ।

**४४. न-वेति विभाषा ॥**

न-वाशब्दयोरर्थो विभाषासंज्ञः स्यात् । निषेधेन समीकृते विषये विकल्पः प्रवर्त्तते । उभयत्रविभाषा प्रयोजनम् । यथा "विभाषा श्वेः" सम्प्रसारणम्—शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः ।

**४५. इग् यणः सम्प्रसारणम् ॥**

यणः स्थाने भूतो भावी वा य इक् स 'सम्प्रसारणम्' उच्यते । इष्टम् । उप्तम् । गृहीतम् । औह्यत । औयत ।

अथ षष्ठीनिर्देशमधिकृत्याह—

**४६. आद्यन्तौ टकितौ ॥**

षष्ठीनिर्दिष्टस्य आदिः टिद् भवति, अन्तः किद् भवति। लविता। भीषयते।

**४७. मिदचोऽन्त्यात् परः ॥**

अचां मध्येऽन्त्यादचः परो मिद् भवति। पयांसि। सिञ्चति। रुणद्धि।

॥ मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति ॥। [1]अनुषङ्गसंयोगादिलोपार्थम्। मङ्क्ता। मग्नः।

**४८. एच इग्घ्रस्वादेशे ॥**

एचः स्थाने ह्रस्वादेश इगेव भवति। अतिरि[2] कुलम्। अतिनु[3] कुलम्। उपगु[4]।

**४९. षष्ठी स्थानेऽयोगा ॥**

अयोगा=अव्यक्तसम्बन्धा षष्ठी स्थाने वेदितव्या। "अस्तेर्भूः"—भविता। "ब्रुवो वचिः"—वक्ता।

अयोगा किम्? "ऊदुपधाया गोहः"—उपगूहयति। निगूहयति।

**५०. स्थानेऽन्तरतमः ॥**

स्थाने प्राप्यमाणानां सदृशतम आदेशः स्यात्। "अकः सवर्णे दीर्घः"—लताग्रम्। कण्ठ्ययोः कण्ठ्य एव दीर्घः।

अर्थतः—तरुणयुवतिः। तरुण्यर्थ एव पुंवदुच्यते।

गुणतः—पाकः, त्यागः, रोगः। अल्पप्राणयोरघोषघोषवतोस्तादृगेव कुत्वम्।

प्रमाणतः—अमुष्मै, अमूभ्याम्। ह्रस्वदीर्घयोस्तत्प्रमाण एवोकारः, ऊकारश्च स्यात्।

स्थानग्रहणं स्थानार्थगुणप्रमाणेषु स्थानान्तर्यं बलीयो यथा स्यात्—चेता, स्तोता। प्रमाणान्तर्यादकारो मा भूत्।

---

१. नकारस्योपधायाः 'अनुषङ्ग' इति संज्ञा कृता पूर्वाचार्यैः।

२. रायमतिक्रान्तम् अतिरि।

३. नावमतिक्रान्तम् अतिनु।

४. गोः समीपे उपगु।

तमब्ग्रहणं बहुष्वन्तरेष्वन्तरतमो यथा स्यात्—वाग्घसति, त्रिष्टुब् भसति ।

**५१. उरण् रपरः ॥**

ऋवर्णस्य स्थानेऽण् रपरो भूत्वा प्रसजति । कर्त्ता । किरति । द्वैमातुरः । कारकः । खट्वर्श्यः । तवल्कारः ।

**५२. अलोऽन्त्यस्य ॥**

आदेशोऽन्तस्यालः स्थाने वेदितव्यः । "इद् गोण्याः"—पञ्चगोणिः । "हनस्त च"—ब्रह्महत्या । "राज्ञः क च"—राजकीयः । "रुहः पः" रोपयति ।

**५३. ङिच्च ॥**

ङिच्चादेशोऽन्त्यस्यालः स्थाने स्यात् । "आनङ् ऋतो द्वन्द्वे"—माता-पितरौ । "अनङ् सौ"—सखा, कर्त्ता ।

"तातङो ङित्त्वसामर्थ्यान्[1] नायमन्त्यविधिः स्मृतः"—कुरुतात् ।

**५४. आदेः परस्य ॥**

परस्य कार्यमुच्यमानमादेरलः प्रत्येतव्यं यत्र पञ्चमीनिर्देशः । "ईदासः"—आसीनः । "अलोऽन्त्यस्य"—अपवादोऽयं योगः परत्वाद् "अनेकाल्शित्" इत्यनेन बाध्यते । "अतो भिस ऐस्"—वृक्षैः ।

**५५. अनेकाल् शित् सर्वस्य ॥**

अनेकालादेशः शिच्च सर्वस्यैव स्थाने स्यात् । "अस्तेर्भूः"—भविता । "लिटस्तझयोरेशिरेच्"—पेचे, पेचिरे । "जश्-शसोः शिः"—कुण्डानि ।

उक्ताः षष्ठीनिर्देशाः ॥

## अथ स्थानिवद्भावप्रकरणम्

**५६. स्थानिवदादेशोऽनल्विधौ ॥**

आदेशाः स्थानिवद् भवन्ति । ब्रूञ्—वक्ता, वक्तुम्, वक्तव्यम् । "धातोः" इति तव्यदादयः । आवधिष्ट—"आङो यमहन" इत्यात्मनेपदम् ।

---

१. ङित्करणं गुणवृद्धिप्रतिषेधार्थं सावकाशमिति अन्त्यविधित्वेऽसामर्थ्यमिति भावः ।

अनल्विधौ किम् ? वर्णविधौ मा भूत् । द्यौः, पन्थाः, सः । "हल्ङ्याब्" इति न सुलोपः ।

❀ आहिभुवोरीट्प्रतिषेधो वक्तव्यः ❀ । आत्थ । अभूत् । "ब्रुव ईट्" इति, "अस्तिसिचोऽपृक्ते" इति च मा भूत् ।

५७. अचः परस्मिन् पूर्वविधौ ॥

अल्विध्यर्थोऽयमारम्भः, नियमार्थो वा ।

अजादेशः परनिमित्तकः पूर्वस्मिन् विधौ कर्त्तव्ये स्थानिवत् स्यात् । पटयति । लघयति । अवधीत् । टिलोपस्यातो लोपस्य च स्थानिवद्भावाद् वृद्धिर्न भवति ।

५८. न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥

एषु विधिष्वजादेशो न स्थानिवत् । पदान्ते—कौ स्तः; आवादेशः स्यात् । द्विर्वचने—दध्यत्र, मध्वत्र; "अनचि च" इति द्विर्वचनं न स्यात् । वरे—वरच्यतो लोपे यायावरः; "आतो लोप इटि च" इति स्यात् । सवर्णविधौ—"श्नसोरल्लोपः", शिण्ढि, पिण्ढि; "अनुस्वारस्य ययि परसवर्णः" न स्यात् । अनुस्वारे—शिषन्ति, पिंषन्ति; "नश्चापदान्तस्य झलि" इत्यनुस्वारो न स्यात् । जश्विधौ—अभ्यस्तस्याकारलोपः, धद्ध्वम्; जश्त्वं न स्यात् । चर्विधौ—"गमहन" इत्युपधालोपः, जक्षतुः, जक्षुः; "खरि च" इति चर्त्वं न स्यात् । अतः स्थानिवत्त्वं निषिध्यते ।

❀ स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ❀ । तत्रेह स्वरो नोदाह्रियते । दीर्घविधौ—"अल्लोपोऽनः" प्रतिदीवा, "हलि च" इति दीर्घो न स्यात् । यलोपे—क्तिचि "अतो लोपः"—कण्डूतिः, वलि यलोपो न स्यात् ।

लोपः किम् ? वाय्वोः । यणादेशः स्थानिवदेव, अतो वलि यलोपो न भवति ।

❀ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वषत्वेषु न स्थानिवत् ❀ ।

लावयतेः पावयतेश्च क्विप्—लौः, पौः । 'क्वौ लुप्तं न स्थानिवद्' इति णिलोपस्य स्थानिवत्त्वनिषेधादूठ् । लुकि—आमलकं फलम् । मयट्, "फले लुक्", "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययनिवृत्तौ तस्य स्थानिवत्त्वनिषेधाद् "यस्येति च" इति लोपो न भवति ।

उपधात्वे—पारिखीयम्। चातुर्थिकाणन्ताद् "यस्येति च" इति लोपस्य स्थानिवत्त्वात् खोपधाच्छः। चङ्परह्रस्वत्वे—अवीवदद् वीणां परिवादकेन। प्रथमस्य णिचोऽस्थानिवत्त्वाद् "णौ चङि" इति ह्रस्वत्वम्। एवं पापच्यतेः—पापक्तिः, पाचयतेः—पाक्तिः, यायज्यतेः—यायष्टिः, याजयतेः—याष्टिरिति अल्लोपणिलोपयोः स्थानिवत्त्वनिषेधाज् झलीति कुत्वषत्वे भवतः।

### ५९. द्विर्वचनेऽचि ॥

द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवद् भवति। स्थानिरूपेणावतिष्ठते। क? द्विर्वचन एव कर्त्तव्ये। कृते द्विर्वचने पुनरादेशरूपं नटवद् गृह्णाति। पपतुः, पपुः। जघ्नतुः, जघ्नुः। जक्षतुः, जक्षुः। अतो लोपस्य, "गमहन" इत्युपधालोपस्य च स्थानिवत्त्वादेकाचो द्विर्वचनं सिध्यति—निनाय, लुलाव। आयावोः स्थानिवत्त्वात् नै-लौशब्दौ द्विरुच्येते।

अचीति किम्? जेघ्रीयते। यङीत्त्वं न स्थानिवत्।

उक्तः स्थानिवद्भावः॥

## अथ लोपसंज्ञादिप्रकरणम्

### ६०. अदर्शनं लोपः ॥

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्। राजा। भवान्। पचेरन्।

### ६१. प्रत्ययस्य लुक्-श्लु-लुपः ॥

प्रत्ययादर्शनस्य तद्भावितस्य संज्ञात्रयं स्यात्। "अदिप्रभृतिभ्यः शपः"—अत्ति। "जुहोत्यादिभ्यः श्लुः"—जुहोति। "जनपदे लुप्"—अङ्गा, वङ्गाः। "द्व्यञ्मगध" इत्यण्।

### ६२. प्रत्ययलोपे प्रत्ययलक्षणम् ॥

लुप्तेऽपि प्रत्यये तद्धेतुकं कार्यं स्यात्। गोमान्। सर्वनामस्थाने नुम्। अहन्। अग्निचित्। अधोक्। "सुप्तिङन्तं पदम्" अतृणेट्—हलादौ "तृणह इम्" इतीम।

इह 'प्रत्ययस्य' इत्यनुवृत्तौ पुनः प्रत्ययग्रहणं कृत्स्नप्रत्ययलोपे यथा स्यात्, प्रत्ययैकदेशलोपे मा भूत्। आघ्नीयेत्यत्र सीयुट्सकारलोपे प्रत्ययलक्षणाभावाज् झलादित्वं नास्तीत्यनुनासिकलोपो न स्यात्।

'तल्लक्षणम्' इति च वाच्ये पुनः प्रत्ययग्रहणं वर्णाश्रयनिवृत्त्यर्थम्। तेन गवे हितं गोहितम्, रायः कुलं रैकुलमिति। 'अचि' इति प्रत्ययलक्षणाभावाद् वर्णाश्रया अवादयो न भवन्ति।

**६३. न लुमताङ्गस्य॥**

लुक्-श्लु-लुप्-शब्दैर्लुप्तेऽङ्गस्य तत् कार्यं न स्यात्। मृष्टः, जुहुतः, गर्गाः—शपि, यञि च गुणवृद्धी न भवतः। राजपुरुषः—ङसो भत्वं न भवति। अहर्ददाति, अहर्भुङ्क्ते—"रोऽसुपि" इति प्रतिषेधो न भवति।

अङ्गस्य किम्? पञ्च। साम। पयः। समुदायस्य पदत्वं भवत्येव।

❀ उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नास्ति ❀ इति परमवाचौ, परमश्वलिहौ, परमगोदुहौ, परमदण्डिनौ—समासेऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वे कुत्व-ढत्व-घत्व-नलोपाः प्राप्ता न स्युः।

अपदादिविधौ किम्? दधिसेचौ, मधुसेचौ। "सात्पदाद्योः" इति षत्वनिषेधो भवत्येव—सेचयतीति सेक्।

**६४. अचोऽन्त्यादि टि॥**

अचां सन्निविष्टानां मध्येऽन्त्यो योऽच् तदादि टिसंज्ञं स्यात्। आताम्, आथाम्—आम्शब्दः। पटत्, दमत्—अच्छब्दः।

पचे, पचेते इत्यत्रान्तादिवत्त्वं व्यपदेशिवद्भावात्।

**६५. अलोऽन्त्यात् पूर्व उपधा॥**

उपान्त्यो वर्णः 'उपधा' उच्यते। पाचकः। शिष्टः। भेत्ता। नर्तकः।

**६६. तस्मिन्निति निर्दिष्टे पूर्वस्य॥**

सप्तम्या निर्दिष्टे पूर्वस्य कार्यं स्यात्। दध्युदकम्। मध्विदम्।

**६७. तस्मादित्युत्तरस्य॥**

पञ्चम्या निर्दिष्टे परस्य कार्यं स्यात्। पदात् परस्य—ग्रामो वः। पुत्रो नः। न पूर्वस्य—युष्माकं ग्रामः। अस्माकं पुत्रः।

### अथ ग्रहणकशास्त्रप्रकरणम्

**६८. स्वं रूपं शब्दस्याशब्दसंज्ञा॥**

शास्त्रे शब्दस्य स्वं रूपं ग्राह्यम्, नार्थः। "अग्नेर्ढक्"—आग्नेयम्। पावकादेर्न भवति। "राज्ञः क च"—राजकीयः। नृपादेर्न भवति।

अशब्दसंज्ञा किम्? टि, घु, घः—अर्थ एव गृह्यते।

इह तु "विभाषा वृक्षमृग" इति प्लक्षन्यग्रोधम्, रुरुपृषतम्; "स्वे पुषः" स्वपोषम्, रैपोषम्, गोपोषमित्यादौ विशेषग्रहणे पर्यायग्रहणे च यत्न आस्थेयः।

**६९. अणुदित् सवर्णस्य चाप्रत्ययः ॥**

अण् उदिच्च गृह्यमाणः सवर्णस्य स्वरूपस्य च ग्राहकः स्यात्। "अस्य च्वौ"—खट्वीस्यात्। "यस्येति च—चौडिः। स्वरूपस्य च—शुक्लीकरोति। दाक्षिः। उदित्—कु, चु, टु, तु, पु।

अप्रत्ययः किम्? "सनाशंसभिक्ष उः", "अ साम्प्रतिके"।

इह प्रतीयते=विधीयते भाव्यत इति प्रत्ययः, तन्निषेधाद् भाव्यमानोऽण् सवर्णान् न गृह्णातीत्ययमर्थ इत्याहुः। तेन "इदम इश्", "अम् सम्बुद्धौ", "वलादेः" इत्यादौ च सवर्णाग्रहणम्।

**७०. तपरस्तत्कालस्य ॥**

तपरो वर्ण आत्मना तुल्यकालं ग्राहयति। "अतो भिस ऐस्"—वृक्षैः। नेह—खट्वाभिः। "ॠत इद् धातोः"—किरति, गिरति।

**७१. आदिरन्त्येन सहेता ॥**

आदिर्वर्णोऽन्त्येनेता इत्संज्ञकेन सह मिलितो मध्यपतितानां वर्णानां ग्राहकः स्यात् स्वरूपस्य च। अण्। अक्। हल्। अच्। सुप्। तिङ्। सुट्। आप्। तृन्। कृञ्।

**७२. येन विधिस्तदन्तस्य ॥**

येन विशेषणेन विधिरुच्यते स तदन्तस्य ग्राहकः स्यात्। "एरच्", इकारेण धातोरज्विधिरितीकारस्तदन्तं ग्राहयति—चय, जयः।

❀ यस्मिन् विधिस्तदादावल्ग्रहणे ❀। अचीत्यजादावियङुवङौ। श्रियौ, भ्रुवः।

उक्तं ग्रहणकशास्त्रम् ॥

अथ वृद्धसंज्ञाप्रकरणम्

**७३. वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥**

अचां मध्ये यस्यादिर्वृद्धिस्तद् वृद्धसंज्ञं स्यात्। "वृद्धाच्छः"—पाणिनीयम्, शैवीयम्, बौद्धीयं मतम्।

❀ वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ❀। देवदत्तीयाश्छात्राः, दैवदत्ता वा।

❀ गोत्रान्तादसमस्तवत् प्रत्ययो वक्तव्यः ❀। वृद्धभारद्वाजीयाः। वृद्धकाश्यपीयाः। अजातौल्वलीयाः।

**७४. त्यदादीनि च ॥**

त्यदादीनि वृद्धसंज्ञकानि स्युः। तदीयम्। इदमीयम्। अदसीयम्। युष्मदीयम्। मदीयम्। अस्मदीयम्। किमीयम्।

**७५. एङ् प्राचां देशे ॥**

एङ् यस्याचामादिस्तद् वृद्धसंज्ञं स्यात् प्राग्देशे[1]। एणीपचनीयो ग्रामः। भोजकटीयो देशः।

देशे किम्? गोमत्यां भवा गौमता मत्स्याः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
प्रथमाध्याये प्रथमः पादः॥
समाप्तश्च पठमापादः॥



## प्रथमाध्याये द्वितीयः पादः

### अथ ङित्प्रकरणम्

**१. गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥**

एभ्योऽञ्णितः प्रत्यया ङिद्वद् भवन्ति। इङादेशो गाङ्—अध्यगीष्ट, अध्यगीष्ठाः। 'नाध्यगीढ्वं ध्रुवं स्मृतीः'। कुटादेः—कुटिता। पुटिता। कुटितुम्। पुटितुम्। संकुटितव्यम्।

अञ्णित् किम्? णिच्—कोटयति। घञ्—कोटः।

❀ व्यचेः कुटादित्वमनसीति वक्तव्यम् ❀। विचिता, विचितुम्। अनसि किम्? असुन्—उरुव्यचाः।

**२. विज इट् ॥**

विजेरिडादिप्रत्ययो ङित् स्यात्। उद्विजिता, उद्विजितुम्। 'नायमुद्विजितुं कालः'। उद्विजितव्यम्। 'पुरुषादुद्विजितव्यमीदृशः'।

---

१. व्याख्यानमिदं काशिकावृत्तिमनुसृत्य। कुणिना तु प्राचांग्रहणमाचार्यनिर्देशार्थं व्याख्यातम्, भाष्यकारोऽपि तथैवाशिश्रियत्। कैयटोऽपि—"कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम्। अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम्। भाष्यकारस्तु कुणिदर्शनमशिश्रियत्" इति व्याचष्टे।

कथम्—'उद्वेजिता वृष्टिभिराश्रयन्ते' ? ण्यन्तात् ।

**३. विभाषोर्णोः ॥**

ऊर्णोतेरिडादिप्रत्ययो वा ङित् स्यात् । प्रोर्णविता, प्रोर्णुविता । प्रोर्णवितुम्, प्रोर्णुवितुम् ।

**४. सार्वधातुकमपित् ॥**

अपित् सार्वधातुकं ङित् स्यात् । कुरुतः, कुर्वन्ति । चिनुतः, चिन्वन्ति ।

अपिदिति किम् ? करोति । करोषि, चिनोति ।

इह पूर्वम् 'अपिद्' इति योगं विभज्य 'ङिच्च पिन्न भवति' इत्यर्थमाहुः, तेन स्तुयादित्यत्र यासुटो ङित्त्वेन पित्त्वनिषेधात् स्तौतीत्येतद्वद् "उतो वृद्धिर्लुकि हलि" इति पिति न वृद्धिः, ब्रूताद् भवानित्यत्र "ब्रुव ईट्" न भवति ।

**अथ कित्प्रकरणम्**

**५. असंयोगाल्लिट् कित् ॥**

असंयोगान्ताद् धातोर्लिट् कित् स्यात् । चक्रतुः, चक्रुः । बिभिदतुः, बिभिदुः । दुद्रुवतुः, दुद्रुवुः । जुहुवतुः, जुहुवुः । ऊचतुः, ऊचुः ।

असंयोगात् किम् ? 'वलिर्बबन्धे जलधिर्ममन्थे' ।

अपिदित्येव—बिभेद ।

**६. इन्धि-भवतिभ्याञ्च ॥**

आभ्यां लिट् कित् स्यात् । समीधे । बभूव ।

अत्र "इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वादाभ्यां किद्वचनानर्थक्यम्" इति भाष्यम्[1] । भाषायां त्विन्धेर्लिटचाम्—समिन्धाञ्चक्रे ।

अत्रेष्टिः—ग्रन्थिश्रन्थिदम्भिस्वञ्जीनामिति जयादित्यः । ग्रेथतुः, ग्रेथुः । श्रेथतुः, श्रेथुः । देभतुः, देभुः । परिषस्वजे ।

**७. मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥**

एभ्यः सेडपि क्त्वा कित् स्यात् । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा ।

---

१. हरदत्तमते त्विदं वार्तिकमेव । द्रष्टव्या एतत्सूत्रस्था पदमञ्जरी ।

८. रुदविदमुषग्रहिस्वपिप्रच्छः सँश्च ॥

एभ्यः सेडपि क्त्वा कित् स्यात्, सँश्च। रुदित्वा, रुरुदिषति। विदित्वा, विविदिषति। मुषित्वा, मुमुषिषति। गृहीत्वा, जिघृक्षति।

स्वपिप्रच्छ्योः सन्नर्थं वचनम्—सुषुप्सति। पिपृच्छिषति।

९. इको झल् ॥

इगन्ताद् धातोर्झलादिः सन् कित् स्यात्। चिकीर्षति। चिचीषति।

झलिति किम्? शिशयिषते। इकः किम्? पिपासति।

झलादेर्विधिर्नवसूत्र्याम्।

१०. हलन्ताच्च ॥

हलन्तादिगुपधाज् झलादिः सन् कित् स्यात्। बिभित्सति। बुभुत्सते।

दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्[1]—धीप्सति, धिप्सति।

११. लिङ्सिचावात्मनेपदेषु ॥

हलन्तादिगुपधादात्मनेपदविषयौ लिङ-सिचौ कितौ स्याताम्। भित्सीष्ट। भुत्सीष्ट। अभित्त। अबुद्ध।

तङनुवृत्तिः[2] षट्सूत्र्याम्।

१२. उश्च ॥

ऋवर्णान्तात् तौ कितौ स्याताम्। कृषीष्ट। हृषीष्ट। अकृत। अहृत। तीर्षीष्ट नदी। अतीर्ष्ट नदी स्वयमेव।

१३. वा गमः ॥

गमेस्तौ वा कितौ स्याताम्। कित्त्वादनुनासिकलोपः। सङ्गसीष्ट, सङ्गंसीष्ट वा। त्वं युद्धे विजयेन सङ्गसीष्ठाः, सङ्गंसीष्ठा वा। समगत, समगंस्त वा भ्रमरः सरोरुहेण।

१४. हनः सिच् ॥

हन्तेस्तङि सिच् कित् स्यात्। आहत। आहसाताम्।

१५. यमो गन्धने ॥

---

१. तथा च सनः कित्त्वादुपधालोपः।

२. 'आत्मनेपदेषु' इत्यस्यानुवृत्तिरित्यर्थः।

यमस्तङि सिच् कित् स्यात्। उदायत, सूचितवानित्यर्थः। 'नोपायध्वं भयं सीताम्'।

गन्धने किम्? आयंस्त पादम्।

**१६. विभाषोपयमने ॥**

स्वीकारे यमस्तङि सिच् किद्वा स्यात्। उपायत कन्याम्। 'उपायंस्त महास्त्राणि'। 'सौमित्रे मामुपायंस्थाः'।

**१७. स्थाघ्वोरिच्च ॥**

स्थाघ्वोस्तङि सिच् कित् स्यात्, इकारश्चान्तादेशः। स्था—उपास्थित करेणुः। प्रास्थितानेकः। घु—अदित, अदिथाः। अधित, अधिथाः। अधिषातां गावौ वत्सेन।

**१८. न क्त्वा सेट् ॥**

सेट् क्त्वा किन्न स्यात्। देवित्वा। वर्त्तित्वा।

मृडित्वादौ कित्त्वमुक्तम्।

सेडनुवृत्तिर्नवसूत्र्याम्।

**१९. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥**

एभ्यः सेण् निष्ठा किन्न स्यात्। शयितः, शयितवान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रक्ष्वेदितः, प्रक्ष्वेदितवान्। प्रमेदितः, प्रमेदितवान्। प्रधर्षितः, प्रधर्षितवान्। स्विदादेः "विभाषा भावादिकर्मणोः" इट्।

धातुपारायणे तु भौवादिकस्य डीङोऽपि निष्ठायामकित्त्वमुक्तम्—उड्डयितः, उड्डयितवान्।

**२०. मृषस्तितिक्षायाम् ॥**

मृषेः क्षमायां निष्ठा किन्न स्यात्। मर्षितः, मर्षितवान्।

तितिक्षायां किम्? अपमृषितं वाक्यमाह।

**२१. उदुपधाद् भावादिकर्मणोरन्यतरस्याम् ॥**

उदुपधाद् धातोर्भावारम्भयोर्निष्ठा किन्न स्याद्वा। द्योतितम्, द्युतितं वानेन। 'प्रद्योतितं तावदुडुप्रतानैर्दिवाकरः प्रद्युतितो न यावत्'।

एवं मुदप्रभृतेः।

अशब्विकरणानां तु नेष्यते—निगुधितम्।

**२२. पूङः क्त्वा च ॥**

पूङः क्त्वा निष्ठा च किन्न स्यात्। पवितः, पवितवान्। पवित्वा।

"पूङश्च" इतीट् ।

क्त्वाग्रहणमुत्तरार्थम्[1] ।

**२३. नोपधात् थफान्ताद्वा ॥**

थकारान्तान्नोपधाद् धातोः फकारान्ताच्च क्त्वा किद्वा स्यात् । श्रथित्वा, श्रन्थित्वा । ग्रथित्वा, ग्रन्थित्वा । गुफित्वा, गुम्फित्वा ।

नोपधात् किम् ? रेफित्वा । थफान्तात् किम् ? स्रंसित्वा ।

**२४. वञ्चिलुञ्च्यृतश्च ॥**

एभ्यः क्त्वा किद् वा स्यात् । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । ऋतित्वा, अर्तित्वा ।

**२५. तृषिमृषिकृशेः काश्यपस्य ॥**

एभ्यः क्त्वा किद् वा स्यात् । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृशित्वा, कर्शित्वा ।

काश्यपग्रहणं पूजार्थम् ।

**२६. रलो व्युपधाद् धलादेः संश्च ॥**

उ+इ =वी[2], तदुपधाद् रलन्ताद् हलादेः धातोः क्त्वा संश्च कितौ वा स्याताम् । लिखित्वा, लेखित्वा । लिलिखिषति, लिलेखिषति ।

एवं द्युत-मुदादेः—द्युतित्वा, द्योतित्वा । दिद्युतिषते, दिद्योतिषते ।

रलन्तात् किम् ? देवित्वा, दिदेविषति । हलादेः किम् ? एषित्वा, एषिषिषति ।

सेडित्येव—भुक्त्वा, बुभुक्षते ।

**२७. ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥**

उकालः=एकमात्रिकः, ऊकालः=द्विमात्रिकः, ऊ३कालः= त्रिमात्रिकोऽच् क्रमेण ह्रस्व-दीर्घ-प्लुतसंज्ञकः स्यात् । अग्निचित् । ह्रीच्छति ।

प्लुतो नोदाह्रियते; भाषायां व्यवहारादर्शनात् ।

**२८. अचश्च ॥**

तद्भाविता[3] ह्रस्वादयोऽच एव स्थाने वेदितव्याः । ह्रस्वः— अतिरि । अतिखट्वम् । दीर्घः—स्तूयते । पटूभवति ।

---

१. क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति सिद्ध एव प्रतिषेधे पुनरिह क्त्वाग्रहणं किमर्थम् ? इत्याह—क्त्वेत्यादि ।

२. उश्च इश्च वोति द्वन्द्वसमासः । ३. स्वसंज्ञया शिष्यमाणा इत्यर्थः ।

अत्र च्छन्दःसूत्राणि द्वादश[1]।

इह भाषार्हाण्यपि स्वरसूत्राणि न निबध्यन्ते, स्वरस्य भाषायामप्रचाराद्, अनर्थित्वाच्च लोकस्य। वेद एवावश्यकः स्वरप्रयोगः; विस्वरेऽनिष्टापातभयात्।

**४१. अपृक्त एकाल्प्रत्ययः ॥**

एको योऽल् प्रत्ययः सोऽपृक्त उच्यते। आसीत्—अपृक्त ईट्। अर्धभाक्—"भजो ण्विः", "वेरपृक्तस्य" लोपः।

**४२. तत्पुरुषः समानाधिकरणः कर्मधारयः ॥**

तुल्याभिधेयपदस्तत्पुरुषः कर्मधारयसंज्ञः स्यात्। याचकवृन्दारिका। "कर्मधारये पुंवत्"।

**४३. प्रथमानिर्दिष्टं समास उपसर्जनम् ॥**

समाससूत्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्। यथा "पञ्चमी भयेन"—वृकभयम्। "सप्तमी शौण्डैः"—अक्षशौण्डः।

**४४. एकविभक्ति चापूर्वनिपाते ॥**

वाक्ये नियतविभक्तिकमुपसर्जनसंज्ञं स्यात् पूर्वनिपातं विना। निर्गतः कौशाम्ब्या निष्कौशाम्बिः। निर्गतं तस्या निष्कौशाम्बिं पश्येत्यादि।

❀ एकविभक्तावषष्ठ्यन्तवचनम् ❀ इति **कात्यायनः**। अर्धपिप्पली। उपसर्जनह्रस्वो न भवति।

### अथ प्रातिपदिकप्रकरणम्

**४५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥**

अर्थवच्छब्दरूपं प्रातिपदिकमुच्यते। वृक्षः। शुक्लः। डित्थः। कुण्डम्। विप्रः। सर्वः। उच्चैः।

---

१. तानि यथा—

२९. उच्चैरुदात्तः॥ ३०. नीचैरनुदात्तः॥ ३१. समाहारः स्वरितः॥ ३२. तस्यादित उदात्तमर्धह्रस्वम्॥ ३३. एकश्रुति दूरात् सम्बुद्धौ॥ ३४. यज्ञकर्मण्यजपन्यूङ्खसामसु॥ ३५. उच्चैस्तरां वा वषट्कारः॥ ३६. विभाषा च्छन्दसि॥ ३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः॥ ३८. देवब्रह्मणोरनुदात्तः॥ ३९. स्वरितात् संहितायामनुदात्तानाम्॥ ४०. उदात्तस्वरितपरस्य सन्नतरः॥

अर्थवत् किम्? वनम्। धनम्। नान्तावधेर्मा भूत्। अधातुः किम्? हन्तेर्लङि अहन्—नलोपो हि स्यात्। अप्रत्ययः किम्? काण्डे। कुण्डे। त्रपुणी—"ह्रस्वो नपुंसके" इति ह्रस्वः स्यात्।

❀ निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या ❀। अध्यागच्छति। प्रलम्बते।

### ४६. कृत्-तद्धित-समासाश्च ॥

एते प्रातिपदिकसंज्ञकाः स्युः। कर्त्ता। श्रीः। दाक्षिः। वरणाः। राजपुरुषः। कुम्भकारः।

'अर्थवत्समुदायानां समासस्यैव' इति नियमाद् वाक्यस्य प्रातिपदिकत्वाभावः—राज्ञः पुरुषः।

### ४७. ह्रस्वो नपुंसके प्रातिपदिकस्य ॥

क्लीबे प्रातिपदिकस्य ह्रस्वः स्यात्। अतिरि। अतिनु। ग्रामणि कुलम्।

नेह—रमते कुलम्; काण्डीभूतं कुलम्; तिङव्यययोरलिङ्गत्वात्।

नेह—वनाग्रम्, वनायेति; बहिरङ्गत्वाद् दीर्घस्य।

### ४८. गोस्त्रियोरुपसर्जनस्य ॥

गोशब्दान्तस्य स्त्रीप्रत्ययान्तस्य चोपसर्जनस्य ह्रस्वः स्यात्। चित्रगुः। स्त्री। निष्कौशाम्बिः। अतिखट्वः।

उपसर्जनस्य किम्? राजकुमारी। 'स्त्री' इति स्त्र्यधिकारविहितस्य ग्रहणान्नेह—अतितन्त्रीः। अतिश्रीः। अतिलक्ष्मीः।

❀ ईयसो बहुव्रीहौ प्रतिषेधः ❀। बहुश्रेयसी राजा कुलं वा। "ईयसश्च" इति कपो निषेधः।

### ४९. लुक् तद्धितलुकि ॥

स्त्रीप्रत्ययस्य लुक् स्यात् तद्धितलुकि सति। पञ्चशष्कुलिः—क्रीतार्थे ठकः "अध्यर्ध" इति लुक्। आमलकं फलम्—"नित्यं वृद्ध" इति मयट्, "फले लुक्"।

### ५०. इद् गोण्याः ॥

तद्धितलुकि सति गोण्या इत् स्यात्। पञ्चगोणिः पटः। योगविभागात्—पञ्चसूचिः।

## अथ संख्यातिदेशप्रकरणम्

### ५१. लुपि युक्तवद् व्यक्तिवचने ॥

लुपि = लुवर्थे, युक्तवत् = प्रकृत्यर्थवद्, व्यक्तिवचने = लिङ्गसंख्ये स्याताम्। वङ्गस्यापत्यानि बहूनि वङ्गाः। "तेषां निवास." इत्यणः "जनपदे लुप्"—वङ्गाः जनपदः। पञ्चालाः। कुरवः। पुण्ड्राः।

लुपि किम्? "लवणाल्लुक्"—लवणः सूपः। लवणा यवागूः। अभिधेयस्यैव लिङ्ग-संख्ये स्याताम्।

❀ हरीतक्यादिषु व्यक्तिः ❀। न वचनम्। हरीतक्या विकाराः फलानि हरीतक्यः फलानि। विकाराणः "हरीतक्यादिभ्यश्च" इति लुप्।

❀ खलतिकादिषु वचनम् ❀। न व्यक्तिः। खलतिकस्य गिरेरदूरभवानि खलतिकं वनानि। "अदूरभवश्च" इत्यणः "वरणादिभ्यश्च" इति लुप्।

"समास उत्तरपदस्यैव बहुवचनविषयस्य युक्तवद्भावः" इति भाष्यम्[1]। मथुरा च पञ्चालाश्च मथुरापञ्चालाः।

उत्तरपदस्यैवेति किम्? पञ्चालमथुरे।

### ५२. विशेषणानाञ्चाजातेः ॥

लुबर्थस्य विशेषणानाञ्च तथा स्यात्। अङ्गाः सम्पन्ना बहुक्षीरघृताः।

अजातेः किम्? वङ्गा जनपदो रमणीयः।

❀ मनुष्यलुपि प्रतिषेधः ❀। चञ्चा मनुष्यो दर्शनीयः। चञ्चा दर्शनीयेति मा भूत्। "इवे प्रतिकृतौ" कन्, तस्य "लुम्मनुष्ये" इति लुप्।

### ५३. तदशिष्यं संज्ञाप्रमाणत्वात् ॥

तदिति व्यक्तिवचनलक्षणं न कर्त्तव्यम्; संज्ञाप्रमाणत्वात्। संज्ञाशब्दा एते—अङ्गाः, वङ्गाः, वरणा इति। नानालिङ्गसंख्या एव प्रमाणम्, यथा—आपः, दाराः, गृहाः, वर्षाः।

### ५४. लुब् योगाप्रख्यानात् ॥

---

[1] वार्त्तिकं चैतत् "समास उत्तरपदस्य बहुवचनस्य लुपः" इति।

"जनपदे लुप्", "वरणादिभ्यश्च" इति लुबप्यशिष्यः; योगस्य सम्बन्धस्यानुपलब्धेः। न हि पञ्चालानां स्वामित्वात् पञ्चाला जनपदः, वृक्षयोगाद् वरणा ग्रामः।

**५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥**

यदि हि वृक्षादियोगः प्रमाणं स्यात् तदा वृक्षाद्यभावे वरणपञ्चालादेरप्रयोगः स्याद्, यथा—दण्डसम्बन्धाभावे दण्डिनः। तस्माद् रूढिरियम्।

**५६. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥**

'प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः', 'क्रियाप्रधानमाख्यातम्', 'साधनप्रधानः कृदन्तः', 'उत्तरपदार्थप्रधानस्तत्पुरुषः' इत्यादि वचनम्, 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति च पूर्वाचार्यपरिभाषितं न वक्तव्यम्। कुतः? अर्थस्य शास्त्रादन्यो लोकः, तत्प्रमाणत्वात्। अनधीतव्याकरणोऽपि 'राजपुरुषमौपगवं चानय' इत्युक्ते राजविशिष्टं पुरुषम्, उपगुविशिष्टञ्चापत्यमानयति।

**५७. कालोपसर्जने च तुल्यम् ॥**

काल उपसर्जनं च न परिभाष्यम्, यतः पूर्वेण तुल्यम्, लोकत एवावगतेरिति प्रत्याख्यानम्।

माथुर्यां तु वृत्तावशिष्यग्रहणमापादमनुवर्त्तते।

**५८. जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥**

जात्यर्थ एको बहुवद्वा स्यात्। सम्पन्नो यवः, सम्पन्ना यवा वा।

एकस्मिन् किम्? सम्पन्नो व्रीहियवौ। संख्याप्रयोगे प्रतिषेधः—एको व्रीहिः सम्पन्नः सुभिक्षकरः।

**५९. अस्मदो द्वयोश्च ॥**

अस्मद एकत्वे द्वित्वे च बहुवचनं वा स्यात्। अहं करोमि, वयं कुर्मो वा। आवां कुर्वः, वयं कुर्मो वा।

व्यवस्थितविभाषया सविशेषणानां प्रतिषेधः। अहं पटुर्ब्रवीमि। आवां पटुतरौ छात्रौ ब्रूवः।

"युष्मदि गुरावेकेषाम्" इति जयादित्यः—त्वं गुरुः, यूयं गुरवः।

**६०. फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे ॥**

फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च नक्षत्रे बहुवचनं वा स्यात् । पूर्वे फल्गुन्यौ, पूर्वाः फल्गुन्यो वा । पूर्वे प्रोष्ठपदे, पूर्वाः प्रोष्ठपदा वा ।

नक्षत्रे किम् ? फल्गुन्यौ माणविके ।

**६१. छन्दसि पुनर्वस्वोरेकवचनम् ॥**

**६२. विशाखयोश्च ॥**

छन्दःसूत्रद्वयम् ।

**६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥**

तिष्य एकः, पुनर्वसू द्वौ, तेषां नक्षत्रद्वन्द्वे बहुवचने प्राप्ते द्विवचनं विधीयते । उदितौ तिष्यपुनर्वसू । अर्थग्रहणात्—सिद्धयपुनर्वसू ।

बहुवचनस्य किम् ? इदं तिष्यपुनर्वसु । एतदेव ज्ञापकम् "सर्वो द्वन्द्वो विभाषैकवद् भवति" इति ।

उक्तः संख्यातिदेशः ॥

## अथ एकशेषप्रकरणम्

**६४. सरूपाणामेकशेष एकविभक्तौ ॥**

तुल्यरूपाणामेकोऽवशिष्यते । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः ।

"सरूपसमुदायाद्धि विभक्तिर्या विधीयते ।
एकस्तत्रार्थवान् सिद्धः समुदायस्य वाचकः" ॥

रूपग्रहणादर्थभेदेऽपि भवति—व्रीहिश्च माषः । मानं च माषः । मूर्खश्च माषः । माषाः । "पादा रश्म्यंघ्रितुर्यांशाः" ।

एकविभक्तौ किम् ? विप्राभ्यां कृतम्, विप्राभ्यां देहि ।

❀ समानार्थानाञ्च भिन्नरूपाणां क्वचिदेकशेषो वक्तव्यः ❀ । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ, कुटिलदण्डौ वा ।

**६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥**

यूना सह वचने वृद्धः शिष्यते, युवा निवर्त्तते । वृद्धयुवप्रत्ययलक्षण एव चेद् विशेषः । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ ।

नेह—गार्ग्यवात्स्यायनौ । "अपत्यमन्तर्हितं वृद्धमुच्यते" ।

६६. स्त्री पुंवच्च ॥

यूना सह वचने वृद्धा स्त्री शिष्यते, पुंवच्च स्त्र्यर्थः स्यात्। गार्गी च गार्ग्यायणश्च गार्ग्यौ। दाक्षी च दाक्षायणश्च दाक्षी। वात्सी च वात्स्यायनश्च वात्स्यौ।

नेह—गार्गीवात्स्यायनौ। दाक्षीवात्स्यायनौ।

६७. पुमान् स्त्रिया ॥

स्त्रिया सहोक्तौ पुमान् शिष्यते। देवश्च देवी च देवौ। असुरौ। ब्राह्मणौ। कुक्कुटौ। मयूरौ। गौरयं गौरियम् एतौ गावौ। शिवश्च शिवा च शिवौ। 'कथयति शिवयोः शरीरयोगम्'।

"तल्लक्षणं चेद्" इत्येव—कुक्कुटमयूर्यौ।

६८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥

स्वस्रा भ्राता, दुहित्रा पुत्रश्च शिष्यते। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

६९. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥

अनपुंसकैश्च सहोक्तौ नपुंसकं शिष्यते। एकवच्चास्य वा स्याल्लिङ्गलक्षण एव चेद् विशेषः। शुक्लः प्रावारः शुक्ला शाटी शुक्लं वस्त्रं तदिदं शुक्लम्, तानीमानि शुक्लानि वा।

अनपुंसकेन किम्? शुक्लश्च शुक्लश्च शुक्लश्च शुक्लानि। एकवन्न भवति।

७०. पिता मात्रा ॥

७१. श्वशुरः श्वश्र्वा ॥

मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्यते। 'जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ'। मातापितरौ च। श्वशुरौ, श्वश्रूश्वशुरौ च।

७२. त्यदादीनि सर्वैर्नित्यम् ॥

सर्वैरिति त्यदादिभिरन्यैश्च सहोक्तौ त्यदादीनि शिष्यन्ते। स च देवदत्तश्च तौ। यश्च चित्रश्च यौ।

"त्यदादीनाञ्च यद् यत् परं तत् तच्छिष्यते" इत्येके। स च यश्च यौ। यश्च कश्च कौ। स च त्वञ्च युवाम्। स च त्वं चाहं च वयम्।

७३. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥

ग्राम्याणामतरुणपशूनां सङ्घेषु सहोक्तौ स्त्री शिष्यते । गाव इमाः । अजा इमाः ।

सङ्घेषु किम् ? एतौ गावौ । अतरुणेषु किम् ? वत्सा इमे । अनेकशफेष्वभिधानान्नेह—अश्वा इमे, गर्दभा इमे ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
प्रथमाध्याये द्वितीयः पादः
समाप्तश्च कुटादिपादः ॥

---

## प्रथमाध्याये तृतीयः पादः

### १. भूवाद्यो धातवः ॥

भूवादयो धातुसंज्ञकाः स्युः । भू—भवति । एधँ—एधते ।

अथ इत्संज्ञाप्रकरणम्

### २. उपदेशोऽजनुनासिक इत् ॥

उपदिश्यत इत्युपदेशो धात्वादिः[1] । तत्रानुनासिकविशिष्टोऽज् इत्संज्ञकः स्यात् । एधँ । स्पर्द्धँ ।

प्रतिज्ञानुनासिक्याः पाणिनीयाः । तेनेहापि स्यात्—रगेँ, लगेँ ।

॥ इर उपसंख्यानं कर्त्तव्यम् ॥ । भिदिर्—अभिदत् । "इरितो वा" इति च्लेरङ ।

### ३. हलन्त्यम् ॥

उपदेशेऽन्त्यं हलित्संज्ञं स्यात् । अइउण् । डुकृञ् । नदट् । सन् । पुक् । अनङ ।

### ४. न विभक्तौ तुस्माः ॥

विभक्तेस्तवर्ग-सकार-मकारा इत्संज्ञा न स्युः । वृक्षान् । पचेरन् । यस्मिन् । पचतः । अपचम् ।

### ५. आदिर्ञिटुडवः ॥

इदित्येव । आदिभूता ञि-टु-डुकारा इत्संज्ञकाः स्युः । ञिमिदा—मिन्नः । टुनदि—नन्दथुः । डुपचँष्—पक्त्रिमम् ।

---

१. धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः ॥

६. षः प्रत्ययस्य ॥

प्रत्ययस्यादिः षकार इत्संज्ञकः स्यात् । ष्वुन्—नर्त्तकी । खनकी । रजकी ।

७. चुटू ॥

चवर्ग-टवर्गौ प्रत्ययस्यादिभूतावित्संज्ञकौ स्याताम् । च्फञ्—कौञ्जायन्यः । जस्—ब्राह्मणाः, वृक्षाः । ञ्यः—शाण्डिक्यः । टः—कुरुचरी । डः—उपसरजः । "अन्नाण्णः"—आन्नः ।

कथं केशचञ्चुः, केशचणः ? चित्कार्याभावात् । "यादी चुञ्चुप्-चणपौ लुप्तनिर्दिष्टयकारौ" इति भाष्यम् ।

८. लशक्वतद्धिते ॥

लकार-शकार-कवर्गास्तद्धितवर्जिताः प्रत्ययस्यादिभूता इत्संज्ञकाः स्युः । ल्यप्—विजित्य । ल्युट्—चयनम् । शप्—भवति । क्तः—भूतम् । खच्—प्रियंवदः । घुरच्—भासुरम् । भङ्गुरम् । ङे—पटवे ।

अतद्धिते किम् ? "अवेः कः"- अविकः ।

९. तस्य लोपः ॥

यस्येत्संज्ञा विहिता तस्य लोपः स्यात् । तथैवोदाहृतम् ।

१०. यथासंख्यमनुदेशः समानाम् ॥

समानाम् = समसंख्यानामुद्देशिनामनुदेशिनां चानुक्रमेणानुदेशः स्यात् । "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"—नन्दनः, ग्राही, पचः ।

११. स्वरितेनाधिकारः ॥

स्वरितो[1] नाम वर्णधर्मः कश्चित्, तेन चिह्नेनाधिकारो ज्ञेयः । यथा—"आत्मनेपदम्", "प्रत्ययः", "अङ्गस्य" ।

अथ आत्मनेपदप्रकरणम्

१२. अनुदात्तङित आत्मनेपदम् ॥

---

१. "न तु तस्य प्रयोगोऽस्ति, केवलमनुवर्त्तमानस्य पथिकस्येव वर्त्म दर्शयित्वा उदास्ते"—इति भाषावृत्त्यर्थविवृतौ सृष्टिधरः ।

अत्र नागोजिभट्टः—"स्वरितत्वं चेदं दोषविशेषरूपमज्झल्साधारणम्; स्वरूपमधिक्रियमाणपदघटकाज्निष्ठं वा । तच्चानुनासिक्यवत् प्रतिज्ञा-गम्यम्" इति ।

अनुदात्तेतो धातोर्ङितश्चात्मनेपदं स्यात् । आस्ते, वर्धते । ङितः— प्लवते, शेते, हंसायते । प्लवमानः, पवमानः, शयानः ।

उपदेश इत्येव, ङित्त्वातिदेशे मा भूत्—उच्चुकुटिषति ।

**१३. भावकर्मणोः ॥**

सर्वधातुभ्यो भावे कर्मणि चात्मनेपदं स्यात् । भावे—स्थीयते त्वया, विस्मीयते मया । कर्मणि—क्रियते कटः ।

**१४. कर्तरि कर्मव्यतिहारे ॥**

क्रियाविनिमये धातोरात्मनेपदं स्यात् कर्त्तरि । व्यतिभवते श्रीः पद्मानाम् । व्यतिभवमानाः पुरुषाः । व्यतिलुनन्ते वीराः ।

**१५. न गतिहिंसार्थेभ्यः ॥**

एभ्यः क्रियाविनिमये धातोर्नास्ति तत् । व्यतिगच्छन्ति । व्यतिहिंसन्ति ।

❀ हसादीनाञ्च ❀ । व्यतिहसन्ति । व्यतिजल्पेयुः ।

कर्त्तरीत्येव—व्यतिगम्यन्ते ग्रामाः ।

❀ हरतेरप्रतिषेधः ❀ । सम्प्रहरन्ते योधाः ।

**१६. इतरेतरान्योन्योपपदाच्च ॥**

आभ्यां युक्ताद् धातोर्नास्ति तत् । इतरेतरस्य व्यतिलुनन्ति । अन्योन्यस्य व्यतिपिबन्ति जलम् ।

चकारात्--परस्परस्य व्यतिलुनन्ति ।

**१७. नेर्विशः ॥**

निपूर्वाद् विशतेरात्मनेपदं स्यात् । निविशते ।

कथं मधुनि विशन्ति भ्रमराः ? लाक्षणिकत्वात् ।

**१८. परिव्यवेभ्यः क्रियः ॥**

एभ्यः क्रियस्तत् स्यात् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

**१९. विपराभ्यां जेः ॥**

आभ्यां जेस्तत् स्यात् । विजयते, पराजयते ।

**२०. आङो दोऽनास्यविहरणे ॥**

आङो दाञस्तत् स्यात् । आदत्ते धनम् ।

अनास्यविहरणे किम् ? व्याददाति मुखम् ।

कथं 'किं व्यादत्से विहग वदनम्' ? कर्त्रभिप्राये भविष्यति ।

**२१. क्रीडोऽनुसंपरिभ्यश्च ॥**

एभ्य आङश्च क्रीडतेस्तत् स्यात्। अनुक्रीडते, संक्रीडते, परिक्रीडते। आक्रीडते।

※ समोऽकूजने ※ अभिधानान्नेह—संक्रीडन्ति रथाः।

※ आगमेः क्षमायामात्मनेपदम् ※। आगमयस्व तावन्माणवक। मा त्वरिष्ठा इत्यर्थः।

※ शिक्षेर्जिज्ञासायाम् ※। कलासु शिक्षते। विद्यासु शिक्षते। शकेः सनि रूपम्।

※ आशिष्येव नाथः ※। सर्पिषो नाथते गृध्नुः।

※ हरतेर्गतताच्छील्ये ※। 'गतविधप्रकारास्तुल्यार्थाः' इति भर्तृहरिः। सादृश्यशीलने हृञस्तत् स्यात्। जलधिमनुहरते सरः। पैतृकमश्वा अनुहरन्ते। 'गतिताच्छील्ये' इति तु न्यासः।

※ किरतेर्हर्षजीविकाकुलायकरणेषु ※। अपस्किरते वृषभो हृष्टः। लपस्किरते कुक्कुटो भक्ष्यार्थी। अपस्किरते श्वाऽश्रयार्थी।

※ आङि नुप्रच्छयोः ※। आनुते शिवा, आक्रोशतीत्यर्थः। आपृच्छते। 'आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्'।

※ शप उपलम्भने ※। प्रियायै शपते कामुकः।

**२२. समवप्रविभ्यः स्थः ॥**

एभ्यस्तिष्ठतेस्तत् स्यात्। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठमानः।

※ आङः स्थः प्रतिज्ञाने ※। वस्तु क्षणिकमातिष्ठन्ते बौद्धाः।

**२३. प्रकाशनस्थेयाख्ययोश्च ॥**

अत्र स्थस्तत् स्यात्। धनिभ्यस्तिष्ठते वेश्या। स्वं प्रकाशयतीत्यर्थः। नृपतौ तिष्ठते जनः। तं स्थेयं करोतीत्यर्थः।

**२४. उदोऽनूर्ध्वकर्मणि ॥**

उदस्थस्तत् स्यादनूर्ध्वचेष्टायाम्। स्वार्थेषूत्तिष्ठते। मुक्तावुत्तिष्ठते जनः, तत्रोत्सहत इत्यर्थः।

अनूर्ध्वग्रहणं किम्? 'जवेन पीठादुदतिष्ठदच्युतः'।

**२५. उपामन्त्रकरणे ॥**

उपात् स्थस्तत् स्यात् मन्त्रश्चेत् करणम्। गायत्र्या सूर्यमुपतिष्ठते ब्राह्मणः।

❀ उपाद्‌ देवपूजासङ्गतकरणमित्रकरणपथिष्विति वक्तव्यम् ❀। विप्रोऽर्कमुपतिष्ठते। गङ्गा समुद्रमुपतिष्ठते। राजा राजानमुपतिष्ठते। अयं पन्थाः कपित्थीमुपतिष्ठते।

❀ वा लिप्सायाम् ❀। अर्थी दातारमुपतिष्ठते, उपतिष्ठति वा।

**२६. अकर्मकाच्च ॥**

उपात् स्थस्तत् स्यात्। यावद्भोजनमुपतिष्ठते।

अकर्मकाद् विधिश्चतुःसूत्र्याम्।

**२७. उद्विभ्यां तपः ॥**

आभ्यां तपस्तत् स्यात्। उत्तपते, वितपते रविः।

अकर्मकादित्येव। उत्तपति सुवर्णं सुवर्णकारः।

❀ स्वाङ्गकर्मकाच्च ❀। वितपते स्वं पृष्ठम्।

**२८. आङो यमहनः ॥**

तत् स्यात्। आयच्छते। व्यायच्छमानः। आहते।

❀ स्वाङ्गकर्मकाच्च ❀। आहते स्वं वक्षः।

**२९. समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः[1] ॥**

संपूर्वाद् गमादेस्तत् स्यात्। सङ्गच्छते, सञ्जग्मे। समृच्छते, समृच्छिष्यते। सम्पृच्छते। संस्वरते। ऋ—समृच्छते, समियृते। श्रु—संश्रृणुते। विद ज्ञाने—संवित्ते।

अकर्मकादित्येव—बाढं सङ्गच्छति।

❀ दृशेश्चेति वक्तव्यम् ❀। सम्पश्यते।

**३०. निसमुपविभ्यो ह्वः ॥**

एभ्यो ह्वेञस्तत् स्यात्। निह्वयते त्वाम्। संह्वयते सखीम्। उपह्वयते। विह्वयते।

❀ उपसर्गादस्यत्यूह्योर्वावचनम् ❀। निरस्यति, निरस्यते। समूहन्, समूहमानः।

**३१. स्पर्धायामाङः ॥**

आङो ह्वेञस्तत् स्यात् स्पर्द्धा चेत्। मल्लो मल्लमाह्वयते।

---

१. "समोगम्यृच्छिभ्याम्' इत्येतावदेव सूत्रम्। प्रच्छ्यादयस्तु वार्तिकदृष्टाः सूत्ररूपेण पठिताः; सूत्रकारवद् वार्तिककारोऽपि शास्त्रस्य कर्ता, न तु व्याख्यातेति दर्शयितुम्"—इति पदमञ्जरीकारः।

